## सन् १९५३

१ लघुकौमुद्याः 'मङ्गलाचरण' श्लोकं सुस्पष्टं विलिख्य तस्यार्थो लिख्यताम् । १०

अथवा—

प्रयत्नस्य भेदं विलिख्य तेषां नामानि सुस्पष्टं लिखत ।

२ गङ्गौघः, प्राच्छंति, गवेन्द्रः, गङ्गे अमू, सञ्चित्, चिन्मयम्, संस्कर्ता, शिवोऽर्च्यः, हरी रम्यः—एषु पञ्चैव प्रयोगाः सूत्रनिर्देशपूर्वकं साध्यन्ताम् १५

३ रामस्य, सर्वे, विश्वपः, सख्युः, क्रोष्टा, सर्वस्यै, वारिणी, यूनः, युष्मान्, वेधाः, इयम्, तुदन्ती—एषु सप्त प्रयोगाः ससूत्रं साध्यन्ताम् । २१

४ भवन्ति, अभूत्, आसीत्, गोपाञ्चकार, शृणोति, जहि, अध्यगीष्ट, पिपूर्तः, धेहि, चिकाय, गृहाण, अबीभवत्, पुत्रीयति,—एषु पञ्च प्रयोगा एव प्रधानसूत्रनिर्देशपूर्वकं साध्यन्ताम् । २०

५ हरि–गो–वारि–राजन्–युष्मद्–भवत्—शब्दानां तृतीयायां सप्तम्याञ्चा रूपाणि विलिख्य, भू, स्था, एध्, अस्, दृश्—धातूनां लोटि मध्यम-पुरुषैकवचने लङि प्रथमपुरुषैकवचने च रूपाणि लिखत । १२ × १०

६ सन्धिसमासयोः को भेदः? सन्धेः समासस्य च प्रधानभेदानां नामानि लिखित्वा उदाहरणानि च लिख्यन्ताम् । १२

अथवा—कारकः, कृतवान्, करः, गार्ग्यः, वैनतेयः, शालीयः,—एतेष प्रकृतिप्रत्ययविभागमात्रं प्रदर्शयत ।

## सन् १९५४

१ निम्नलिखितेषु पञ्चानामेव सन्धिविच्छेदं कृत्वा ससूत्रं साधनप्रकारं दर्शयत—सुद्ध्युपास्यः, गवाग्रम्, प्रश्नः, उत्थानम्, सन्नच्युतः, मनोरथः, स शम्भुः । १५

२ निम्नलिखितेषु पञ्च प्रयोगाः प्रधानसूत्रैः साधनीयाः— १५

सखा, श्रियाम्, दध्नः, यूनः, विद्वान्, चतुर्षु, अस्माकम् ।

३ अचीकमत, जहि, देहि, कष्टा, छिन्द्धि, अजनि, अतिष्ठिपत् । —एषु पञ्च प्रयोगान् विशेषसूत्राणि लिखित्वा साधयत । २०

४ (क) पति-पितृ-वेधस्-गुणिन्-वारि-शब्दानां द्वितीयायां सप्तम्याञ्च रूपाणि लिखत ।

(ख) पा-कृ-दृश्-धातूनां लटि, लृटि, लोटि च मध्यमपुरुषे रूपाणि लिख्यन्ताम् । १०

५ वाच्यपरिवर्तनं क्रियताम् :—

(क) (१) अहं सुखम् अनुभवामि (२) स घटं करोति ।

(ख) शुद्धं क्रियताम् :—(१) चित्रमयां ददाति । (२) व्रजं गामवरोधति । (३) मदनमहेशौ सुरेशो च धर्मं रचतः ।

६ (क) द्विगु कर्मधारययोः सोदाहरणं भेदं प्रदर्शयत ।

(ख) कर्तृकरणयोर्लक्षणमुदाहरणं च लिखत ।

७ आदाय, श्रुत्वा, दानम् , गतः, गौरवम् , जनता, लौकिकः, गोपी,—एषु पञ्चानां प्रकृतिप्रत्ययौ विभजनीयौ । १०

## सन् १९५५

१ इकारवकारलकाराणामुच्चारणस्थानानि लिखित्वा संयोग-पद-प्रातिपदिक-भसंज्ञा-विधायकानि सूत्राणि लेख्यानि । ५

२ इमौ × अत्र, श्री × ईशः, जगद् × हिताय, सन् × अच्युतः, सस् × शम्भुः, —एषु सूत्रनिर्देशपुरस्सरं सन्धिः क्रियताम् । १०

३ नारीणाम् , गाः, श्रियै, ज्ञानानि, चत्वारः, अमुष्य; अद्भिः,—एषु कानपि चतुरः प्रयोगान् सूत्रनिर्देशपुरःसरं संसाध्य पपी-वारि-पथिन्-युष्मच्छब्दानां द्वितीयैकवचने षष्ठीबहुवचने च रूपाणि लिख्यन्ताम् । २०

४ भवति, कामयते, दोग्धि, अजुहवुः, अदीव्यत् , रुन्धः, करोति, अजीगणत् ,—एषु कानपि चतुरः प्रयोगान् संसाध्य एध्-गम्-दुह्-कृ धातूनां लङि मध्यमपुरुषैकवचने रूपाणि लेख्यानि । २०

५ भावयति, जिगमिषति, पुत्रीयति, स्तूयते, शिष्यः, मार्ग्यः, कर्ता, पक्वः, रामः—एषु चतुरः प्रयोगान् प्रकृतिप्रत्ययनिर्देशपूर्वकम् संसाध्य कति कारकाणि कानि च तानि इति विचार्य लिखत । २०

६ वृत्तिभेदाः कियन्तः ? के च ते इति लिखित्वा राजपुरुषः, पीताम्बरः, —एषु विग्रहवाक्यं प्रदर्श्य गार्ग्यः, वैयाकरणः, एतर्हि, अजा, इन्द्राणी, युवतिः—एषु चतुर्णाम् प्रकृतिप्रत्ययौ विभजनीयौ । १५

७ (क) वाच्यपरिवर्तनं विधेयम्—

(१) देवदत्तेन देवी स्तूयते । (२) अहं पत्राणि लिखामि । ४

(ख) शुद्धं कृत्वा लिख्यताम्—(१) अहं तत्र न लिखति,

(२) मम सखेः सर्वैः बालिकाः पठति ।

(३) अस्यां देशे वीराः भवन्ति (४) मया पुस्तकानि पठ्यते । ४

